न भक्षयन्ति ये त्वर्थान्न्यायतो वर्धयन्ति च।
नित्याधिकाराः कार्यास्ते राज्ञः प्रियहिते रताः॥

—कौटिल्यः, अर्थशास्त्रम् २।९

# ६—अनन्तपारं किल शब्दशास्त्रम्

अथ शब्दानुशासनम्।

केषां शब्दानाम्?

लौकिकानां वैदिकानां च। तत्र लौकिकास्तावद्—'गौः, अश्वः, पुरुषः, हस्ती, शकुनिः, मृगः, ब्राह्मणः' इति। वैदिकाः खल्वपि—'शं नो देवीरभिष्टये। इषे त्वोर्जे त्वा। अग्निमीडे पुरोहितम्। अग्न आ याहि वीतये' इति।

अथ गौरित्यत्र कः शब्दः? किं यत्तत्सास्नालाङ्गूलककुदखुर-विषाण्यर्थरूपं सः शब्दः।

नेत्याह। द्रव्यं नाम तत्।

यत्तर्हि तदिङ्गितं चेष्टितं निमिषितमिति स शब्दः?

नेत्याह। क्रिया नाम सा।

यत्तर्हि तच्छुक्लो नीलः कपिलः कपोत इति स शब्दः?

नेत्याह। गुणो नाम सः।

यत्तर्हि तद्भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं स शब्दः?

नेत्याह। आकृतिर्नाम सा।

कस्तर्हि शब्दः?

येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः। अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते। तद्यथा—शब्दं कुरु, मा शब्दं कार्षीः, शब्दकार्ययं माणवक, इति ध्वनिं कुर्वन्नेवमुच्यते। तस्माद् ध्वनिः शब्दः।

कानि पुनः शब्दानुशासनस्य प्रयोजनानि ?

रक्षोहागमलघ्वसन्देहाः प्रयोजनम्। रक्षार्थं वेदानामध्येयं व्याकरणम्। लोपागमवर्णविकारज्ञो हि सम्यग्वेदान्परिपालयिष्यतीति। ऊहः खल्वपि—न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः। ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः। तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम्। तस्मादध्येयं व्याकरणम्।

आगमः खल्वपि—'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति। प्रधानं च षट्स्वङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति।

लघ्वर्थं चाध्येयं व्याकरणम्। न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या ज्ञातुम्।

असन्देहार्थं चाध्येयं व्याकरणम्। याज्ञिकाः पठन्ति—'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत' इति। तस्यां सन्देहः—स्थूला चासौ पृषती च स्थूलपृषती, स्थूलानि पृषन्ति यस्याः सेयं स्थूलपृषतीति। तां नावैयाकरणः स्वरतोऽध्यवस्यति—यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः, अथ समासान्तोदात्तत्वं ततस्तत्पुरुष इति।

शब्दानुशासनमिदानीं कर्तव्यम् ।

तत्कथं कर्तव्यम् ? किं शब्दोपदेशः कर्तव्यः, आहोस्विदपशब्दोपदेशः, आहोस्विदुभयोपदेश इति ।

यदि तावच्छब्दोपदेशः क्रियते गौरित्येतस्मिन्नुपदिष्टे गम्यत एतद्—गाव्यादयोऽपशब्दा इति । अथाप्यपशब्दोपदेशः क्रियते गाव्यादिषूपदिष्टेषु गम्यत एतद्—गौरित्येष शब्द इति ।

किं पुनरत्र ज्यायः ?

लघुत्वाच्छब्दोपदेशः । गरीयानपशब्दोपदेशः । एकैकस्य शब्दस्य बहवोऽपभ्रंशाः । तद्यथा गौरित्यस्य शब्दस्य 'गावी', 'गोणी', 'गोता', 'गोपोतलिका' इत्येवमादयोऽपभ्रंशाः । इष्टान्वाख्यानं खल्वपि भवति ।

अनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः । एवं हि श्रूयते—बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच । नान्तं जगाम । बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालो न चान्तं जगाम । किं पुनरद्यत्वे ? यः सर्वथा चिरं जीवति वर्षशतं जीवति । चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति— आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति । तत्र चास्यागमकालेनैवायुः कृत्स्नं पर्युपयुक्तं स्यात् । तस्मादनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठः ।

—पतञ्जलिः, महाभाष्यम् १।१।१

## ७—सत्सेवितः पन्थाः

सद्वृत्तमखिलेनोपदेक्ष्यामः । तद्यथा—देवगोब्राह्मणगुरुवृद्धसिद्धाचार्यानर्चयेत् । अग्निमुपाचरेत् । ओषधीः प्रशस्ता धारयेत् । द्वौ कालावुपस्पृशेत् । मलायनेष्वभीक्ष्णं पादयोश्च वैमल्यमादध्यात् । त्रिः पक्षस्य केशश्मश्रुलोमनखान् संहारयेत् । नित्यमनुपहतवासाः सुमनाः सुगन्धिः स्यात् ।

साधुवेशः, प्रसाधितकेशः, मूर्धश्रोत्रघ्राणपादतैलनित्यः, पूर्वाभिभाषी, सुमुखः, दुर्गेष्वभ्युपपत्ता, होता, यष्टा, दाता, चतुष्पथानां नमस्कर्ता, बलीनामुपहर्ता, अतिथीनां पूजकः, पितृभ्यः पिण्डदः, काले हितमितमधुरार्थवादी, वश्यात्मा, धर्मात्मा, हेतावीर्ष्युः, फले नेर्ष्युः, निश्चिन्तः, निर्भीकः, धीमान्, ह्रीमान्, महोत्साहः, दक्षः, क्षमावान्, धार्मिकः, आस्तिकः, विनयबुद्धिविद्याभिजनवयोवृद्धसिद्धाचार्याणामुपासिता, छत्री, दण्डी, मौली, सोपानत्कः, युगमात्रदृग्विचरेत् । मङ्गलाचारशीलः, कुचैलास्थिकण्टकामेध्यकेशतुषोत्करभस्मकपालस्नानबलिभूमीनां परिहर्ता । प्राक् श्रमाद् व्यायामवर्जी स्यात् । सर्वप्राणिषु बन्धुभूतः स्यात् । क्रुद्धानामनुनेता, भीतानामाश्वासयिता, दीनानामभ्युपपत्ता, सत्यसन्धः, सामप्रधानः, परपरुषवचनसहिष्णुः, अमर्षघ्नः, प्रशमगुणदर्शी, रागद्वेषहेतूनां हन्ता ।

नानृतं ब्रूयात् । नान्यस्वमाददीत । नान्यस्त्रियमभिलषेन्नान्यश्रियम् । न वैरं रोचयेत् । न कुर्यात्पापम् । न पापेऽपि पापी स्यात् । नान्यदोषान् ब्रूयात् । नान्यरहस्यमागमयेत् । नाधार्मिकैर्न नरेन्द्रद्विष्टैः सहासीत नोन्मत्तैर्न पतितैर्न भ्रूणहन्तृभिर्न क्षुद्रैर्न दुष्टैः ।

न दुष्टयानान्यारोहेत्। नाजानुसमं कठिनमासनमध्यासीत, नानास्तीर्णमनुपहितमविशालमसमं वा शयनं प्रपद्येत, न गिरिविषममस्तकेष्वनुचरेत्। न द्रुममारोहेत्। न जलोग्रवेगमवगाहेत। कूलच्छायां नोपासीत। नाग्न्युत्पातमभितश्चरेत्। नोच्चैर्हसेत्। न शब्दवन्तं मारुतं मुञ्चेत्। नासंवृतमुखो जृम्भां क्षवथुं हास्यं वा प्रवर्तयेत्। न नासिकां कुष्णीयात्। न दन्तान् विघट्टयेत्। न नखान् वादयेत्। नास्थीन्यभिहन्यात्। न भूमिं विलिखेत्। न छिन्द्यात्तृणम्। न लोष्टं मृद्नीयात्। न विगुणमङ्गैश्चेष्टेत। ज्योतींष्यनिष्टममेध्यमशस्तं च नाभिवीक्षेत। न हुं कुर्याच्छवम्। न चैत्यध्वजगुरुपूज्याशस्तच्छायामाक्रामेत्। न क्षपास्वमरसदनचैत्यचत्वरचतुष्पथोपवनश्मशानाघातनान्यासेवेत। नैकः शून्यगृहं न चाटवीमनुप्रविशेत्। न पापवृत्तान् स्त्रीमित्रभृत्यान् भजेत। नोत्तमैर्विरुध्येत। नावरानुपासीत। न जिह्मं रोचयेत्। नानार्यमाश्रयेत। न भयमुत्पादयेत्। न साहसातिस्वप्नप्रजागरस्नानपानाशनान्यासेवेत। नोर्ध्वजानुश्चिरं तिष्ठेत्। न व्यालानुपसर्पेन्न दंष्ट्रिणो न विषाणिनः। पुरोवातातपावश्यायातिप्रवातान् जह्यात्। कलिं नारभेत। नासुनिभृतोऽग्निमुपासीत। नोच्छिष्टो नाधःकृत्वा प्रतापयेत्। नाविगतक्लमो नानाप्लुतवदनो न नग्न उपस्पृशेत्। न स्नानशाट्या स्पृशेदुत्तमाङ्गम्। न केशाग्राण्यभिहन्यात्। नोपस्पृश्य त एव वाससी बिभृयात्। नास्पृष्ट्वा रत्नाज्यपूज्यमंगलसुमनसोऽभिनिष्क्रामेत्। न पूज्यमङ्गलान्यपसव्यं गच्छेन्नेतराण्यनुदक्षिणम्।

नारत्नपाणिर्नास्नातो नोपहतवासा नाजपित्वा नाहुत्वा देवताभ्यो नानिरूप्य पितृभ्यो नादत्त्वा गुरुभ्यो नातिथिभ्यो नोपाश्रितेभ्यो नापुण्यगन्धो नामाली नाप्रक्षालितपाणिवदनो नाशुद्धमुखो नोदङ्मुखो न विमना नाभक्ताशिष्टाशुचिक्षुधित-

परिचरो न पात्रीष्वमेध्यासु नादेशे नाकाले नाकीर्णे नादत्त्वाऽग्रमग्नये नाप्रोक्षितं प्रोक्षणोदकैर्न मन्त्रैरनभिमन्त्रितं न कुत्सयन् न कुत्सितं न प्रतिकूलोपहितमन्नमाददीत, न पर्युषितमन्यत्र मांसहरितकशुष्कशाकफलभक्ष्येभ्यः । नाशेषभुक् स्यादन्यत्र दधिमधुलवणसक्तुसर्पिर्भ्यः । न नक्तं दधि भुञ्जीत । न सक्तूनेकानश्नीयात्, न निशि, न भुक्त्वा, न बहून्, न द्विः, नोदकान्तरितान्, न छित्त्वा द्विजैर्भक्षयेत् ।

नानृजुः क्षुयान्नाद्यान्न शयीत । न वेगितोऽन्यकार्यः स्यात् । न वाय्वग्निसलिलसोमार्कद्विजगुरुप्रतिमुखं निष्ठीविकावातवर्चोमूत्राण्युत्सृजेत् । न पन्थानमवमूत्रयेत् । न जनवति नान्नकाले न जपहोमाध्ययनबलिमङ्गलक्रियासु श्लेष्मसिङ्घाणकं मुञ्चेत् ।

न सतो न गुरून् परिवदेत् । नाशुचिरभिचारकर्मचैत्यपूज्यपूजाध्ययनमभिनिर्वर्तयेत् ।

न विद्युत्स्वनार्तवीषु, नाभ्युदितासु दिक्षु, नाग्निसम्प्लवे, न भूमिकम्पे, न महोत्सवे, नोल्कापाते, न महाग्रहोपगमने, न नष्टचन्द्रायां तिथौ, न सन्ध्ययोः, नामुखाद् गुरोः, नावपतितम्, नातिमात्रम्, न तान्तम्, न विस्वरम्, नातिद्रुतम्, न विलम्बितम्, नातिक्लीबम्, नात्युच्चैर्नातिनीचैः स्वरैरध्ययनमभ्यसेत् ।

नातिसमयं जह्यात् । न नियमं भिन्द्यात् । न नक्तं नादेशे चरेत् । न सन्ध्यास्वभ्यवहाराध्ययनस्त्रीस्वप्नसेवी स्यात् । न बालवृद्धलुब्धमूर्खक्लिष्टक्लीबैः सह सख्यं कुर्यात् । न मद्यद्यूतवेश्याप्रसङ्गरुचिः स्यात् । न गुह्यं विवृणुयात् । न कञ्चिदवजानीयात् । नाहंमानी स्यान्नादक्षो नादक्षिणो नासूयकः । न गवां दण्डमुद्यच्छेत् । न वृद्धान्, न गुरून्, न गणान्, न नृपान् वाऽधिक्षिपेत् । न चातिब्रूयात् । न बान्धवानुरक्तकृच्छ्रद्वितीयगुह्यज्ञान् बहिष्कुर्यात् ।

नाधीरो नात्युच्छ्रितसत्त्वः स्यात्, नाभृतभृत्यः, नाविश्रब्धस्वजनः, नैकः सुखी, न दुःशीलाचारोपचारः, न सर्वविश्रम्भी, न सर्वाभिशङ्की, न सर्वकालविचारी। न कार्यकालमतिपातयेत्। नापरीक्षितमभिनिविशेत्। नेन्द्रियवशगः स्यात्। न चञ्चलं मनोऽनुभ्रामयेत्। न बुद्धीन्द्रियाणामतिभारमादध्यात्। न चातिदीर्घसूत्री स्यात्। न क्रोधहर्षावनुविदध्यात्। न शोकमनुवसेत्। न सिद्धावौत्सुक्यं गच्छेन्नासिद्धौ दैन्यम्।

प्रकृतिमभीक्ष्णं स्मरेत्। हेतुप्रभावनिश्चितः स्यात् हेत्वारम्भनित्यश्च। न कृतमित्याश्वसेत्। न वीर्यं जह्यात्। नापवादमनुस्मरेत्।

—चरकसंहिता

## ८—न यत्राग्निः प्रभवति

सत्यपरिभावितां वाचमग्निरपि न प्रसहते लङ्घयितुमिति सत्यवचनेऽभियोगः करणीयः। तद्यथानुश्रूयते।

बोधिसत्त्वः किलान्यतमस्मिन्नरण्यायतने वर्तकापोतको भवति स्म। स कतिपयरात्रोद्भिन्नाण्डकोशः प्रविरोक्ष्यमाणतरुणपक्षः

परिदुर्बलत्वादलक्ष्यमाणाङ्गप्रत्यङ्गप्रदेशः स्वमातापितृप्रयत्नरचिते तृणगहनोपगूढे गुल्मलतासंनिश्रिते नीडे सम्वर्ङ्कर्भ्रातृभिः सार्धं प्रतिवसति स्म। तदवस्थोऽपि चापरिप्लुतधर्मसंज्ञत्वान्मातापितृभ्यामुपहृतान्प्राणिनो नेच्छति स्माभ्यवहर्तुम्। यदेव त्वस्य तृण-बीजन्यग्रोधफलाद्युपजह्रतुर्मातापितरौ तेनैव वर्तयामास। तस्य तया रूक्षाल्पाहारतया न कायः पुष्टिमुपययौ। नापि पक्षौ सम्यक् प्रविरुरोहतुः। इतरे तु वर्तकापोतका यथोपनीतमाहारमभ्यवहरन्तो बलवन्तः सञ्जातपक्षाश्च बभूवुः। धर्मता ह्येषा यदुत—

> धर्माधर्मनिराशङ्कः सर्वाशी सुखमेधते।
> धर्म्यां तु वृत्तिमन्विच्छन्विचिताशीह दुःखितः॥
> ह्रीमता त्विह दुर्जीवं नित्यं शुचिगवेषिणा।
> सलोनेनाप्रगल्भेन शुद्धाजीवेन जीवता॥

तेषामेवमवस्थानां नातिदूरे महान्वनदावः प्रतिभयप्रसक्त-निनदो विजृम्भमाणधूमराशिर्विकीर्यमाणज्वालावलीलोलविस्फु-लिङ्गः सन्त्रासनो वनचराणामनयो वनगहनानां प्रादुरभवत्।

> भयद्रुतोद्भ्रान्तविहङ्गमार्थं
> परिभ्रमद्दीनमृगं समन्तात्।
> धूमौघमग्नं पटुवह्निशब्दं
> वनं तदार्त्येव भृशं रराम॥

क्रमेण चोत्पीड्यमान स इव वह्निः पटुना मारुतेन तृणगहना-नुसारी तेषां नीडसमीपमुपजगाम। अथ ते वर्तकापोतका भय-विरसव्याकुलविरावाः परस्परनिरपेक्षाः सहसा समुत्पेतुः। परि-दुर्बलत्वादसञ्जातपक्षत्वाच्च बोधिसत्त्वस्तु नोत्पतितुं प्रयत्नं चकार। विदितात्मप्रभावस्त्वसम्भ्रान्त एव स महासत्त्वः

सरभसमिवोपसर्पन्तमग्निं सानुनयमित्युवाच—

व्यर्थाभिधानचरणोऽस्म्यविरूढपक्ष-
स्त्वत्सम्भ्रमाच्च पितरावपि मे प्रलीनौ ।
त्वद्योग्यमस्ति न च किञ्चिदिहातिथेय-
मस्मान्निवर्तितुमतस्तव युक्तमग्ने ॥

इत्युक्ते सत्यपरिभावितवचसा तेन महासत्त्वेन—

उदीर्यमाणोऽप्यनिलेन सोऽग्नि-
र्विशुष्कसंसक्ततृणेऽपि कक्षे ।
नदीमिव प्राप्य विवृद्धतोयां
तद्वाचमासाद्य शशाम सद्यः ॥

अद्यापि तं हिमवति प्रथितं प्रदेशं
दावाग्निरुद्धतशिखोऽपि समीरणेन ।
मन्त्राभिशप्त इव नैकशिरा भुजङ्गः
सङ्क्षोभमन्दलुलितार्चिरुपैति शान्तिम् ॥

तत्किमिदमुपनीतमिति, उच्यते—

वेलामिव प्रचलितोर्मिफणः समुद्रः
शिक्षां मुनीन्द्रविहितामिव सत्यकामः ।
सत्यात्मनामिति न लङ्घयितुं यदाज्ञां
शक्तः कृशानुरपि सत्यमतो न जह्यात् ॥

तदेवं सत्यवचनपरिभाविता वाचमग्निरपि न प्रसहते लङ्घयितुमिति सत्यवचनेऽभियोगः करणीयः ।

—आर्यशूरः (जातकमालायां वर्तकापोतकजातकम्)

## ६—दारगुणाः

अस्ति द्रविडेषु काञ्ची नाम नगरी। तस्यामनेककोटिसारः श्रेष्ठिपुत्रः शक्तिकुमारो नामासीत्। सोऽष्टादशवर्षदेशीयश्चिन्तामापेदे—'नास्त्यदाराणाम् अननुगुणदाराणां वा सुखं नाम। तत्कथं नु गुणवद् विन्देयं कलत्रम्' इति।

अथ परप्रत्ययाहृतेषु दारेषु यादृच्छिकीं सम्पत्तिमनभिसमीक्ष्य कार्तान्तिको नाम भूत्वा वस्त्रान्तपिनद्धशालिप्रस्थो भुवं बभ्राम। 'लक्षणज्ञोऽयम्' इत्यमुष्मै कन्याः कन्यावन्तः प्रदर्शयाम्बभूवुः। यां कांचिल्लक्षणवतीं सवर्णां कन्यां दृष्ट्वा स किल स्म ब्रवीति—'भद्रे, शक्नोषि किमनेन शालिप्रस्थेन गुणवदन्नमस्मानभ्यवहारयितुम्' इति। स हसितावधूतो गृहाद् गृहं प्रविश्याभ्रमत्।

एकदा तु शिविषु कावेरीतीरपत्तने सह पितृभ्यामवसितमहर्द्धिमवशीर्णभवनसारां धात्र्या प्रदर्श्यमानां काञ्चन विरलभूषणां कुमारीं ददर्श। अस्यां संसक्तचक्षुश्चातर्कयत्—'अस्याः खलु कन्यकायाः सर्व एवावयवा नातिस्थूला नातिकृशा नातिह्रस्वा नातिदीर्घा न विकटा मृजावन्तश्च। रक्ततलाङ्गुली यवमत्स्यकमलकलशाद्यनेकपुण्यलेखालाञ्छितौ करौ, समगुल्फसन्धी मांसलावशिरालौ चाङ्घ्री, तनुतरमीषन्निम्नं गम्भीरं नाभिमण्डलम्, वलित्रयेण चालङ्कृतमुदरम्, धनधान्यपुत्रभूयस्त्वचिह्नलेखालाञ्छिततले स्निग्धोदग्रकोमलनखमणी ऋज्वनुपूर्ववृत्तताम्राङ्गुली संनतांसदेशे सौकुमार्यवत्यौ निमग्नपर्वसन्धी च बाहुलते, तन्वी कम्बुवृत्तबन्धुरा च कन्धरा, वृत्त-

मध्यविभक्तरागाधरम् असंक्षिप्तचारुचिबुकम् आपूर्णकठिनगण्डमण्डलम् असङ्गतानुवक्रनीलस्निग्धभ्रूलतम् अनतिप्रौढतिलकुसुमसदृशनासिकम् असितधवलरक्तत्रिभागभासुरमधुराधीरसञ्चारमन्थरायतेक्षणम् इन्दुशकलसुन्दरललाटम् इन्द्रनीलशिलाकाररम्यालकपंक्ति द्विगुणकुण्डलितम्लाननालीकनाललिततलम्बश्रवणपाशयुगलमाननकमलम्, अनतिभङ्गुरो बहुलः पर्यन्तेऽप्यकपिकलरुचिरायामवानेकैकनिसर्गसमस्निग्धनीलो गन्धग्राही च मूर्धजकलापः। सेयमाकृतिर्न व्यभिचरति शीलम्। आसज्जति च मे हृदयमस्यामेव । तत्परीक्ष्यैनामुद्वहेयम् । अविमृश्यकारिणां हि नियतमनेकाः पतन्त्यनुशयपरम्पराः' इति स्निग्धदृष्टिराचष्ट—'भद्रे, कच्चिदस्ति कौशलं शालिप्रस्थेनानेन सम्पन्नमाहारमस्मानभ्यवहारयितुम्' इति ।

ततस्तया वृद्धदासी साकूतमालोकिता । तस्य हस्तात्प्रस्थमात्रं धान्यमादाय क्वचिदलिन्दोद्देशे सुसिक्तसंमृष्टे दत्तपादशौचमुपावेशयत् । सा कन्या तान् गन्धशालीन्संक्षुद्य मात्रया विशोष्यातपे मुहुर्मुहुः परिवर्त्य स्थिरसमायां भूमौ नालीपृष्ठेन मृदु मृदु घट्टयन्ती तुषैरखण्डैस्तण्डुलान् पृथक्चकार । जगाद च धात्रीम्—'मातः, एभिस्तुषैरर्थिनो भूषणमृजाक्रियाक्षमैः स्वर्णकाराः । तेभ्य इमान्दत्त्वा लब्धाभिः काकिणीभिः स्थिरतराण्यनत्यार्द्राणि नातिशुष्काणि काष्ठानि मितंपचां स्थालीमुभे शरावे चाहर' इति ।

तथाकृते तया तांस्तण्डुलाननतिनिम्नोत्तानविस्तीर्णकुक्षौ ककुभोलूखले लोहपत्रवेष्टितमुखेन समशरीरेण विभाव्यमानमध्यतानवेन व्यायतेन गुरुणा खादिरेण मुसलेन चतुरललितो-

क्षपणावक्षेपणायासितभुजम् असकृदङ्गुलिभिरुद्धृत्योद्धृत्यावहत्य शूर्पशोधितकणकिंशारुकांस्तण्डुलानसकृदद्भिः प्रक्षाल्य क्वथितपञ्चगुणे जले दत्तचुल्लीपूजा प्राक्षिपत्। प्रश्लथावयवेषु प्रस्फुरत्सु तण्डुलेषु मुकुलावस्थामतिवर्तमानेषु संक्षिप्यानलमुपहितमुखपिधानया स्थाल्यान्नमण्डमगालयत्। दर्व्या चावघट्ट्य मात्रया परिवर्त्य समपक्वेषु सिक्थेषु तां स्थालीमधोमुखीमवातिष्ठिपत्। इन्धनान्यन्तःसाराण्यम्भसा समभ्युक्ष्य प्रशमिताग्नीनि कृष्णाङ्गारीकृत्य तदर्थिभ्यः प्राहिणोत्—'एभिर्लब्धाः काकिणीर्दत्त्वा शाकं घृतं दधि तैलमामलकं चिञ्चाफलं च यथा-लाभमानय' इति।

तथानुष्ठिते च तया द्वित्रानुपदंशानुपपाद्य तदन्नमण्डमार्द्रवालुकोपहितनवशरावगतमतिमृदुना तालवृन्तानिलेन शीतलीकृत्य, सलवणसम्भारं दत्ताङ्गारधूपवासं च सम्पाद्य, तदप्यामलकं श्लक्ष्णपिष्टमुत्पलगन्धि कृत्वा धात्रीमुखेन स्नानाय तमचोदयत्। तया च स्नानशुद्धया दत्ततैलामलकः क्रमेण सस्नौ। स्नातः सिक्तमृष्टे कुट्टिमे फलकमारुह्य पाण्डुहरितस्य त्रिभागशेषलूनस्याङ्गणकदलीपलाशस्योपरि दत्तशरावद्वयमार्द्रमभिमृशन्नतिष्ठत्। सा तु तां पेयामेवाग्रे समुपाहरत्। पीत्वा चापनीताध्वक्लमः प्रहृष्टः प्रक्लिन्नसकलगात्रः स्थितोऽभूत्।

ततस्तस्य शाल्योदनस्य दर्वीद्वयं दत्त्वा सर्पिर्मात्रां सूपमुपदंशं चोपजहार। इमं च दध्ना च त्रिजातकावचूर्णितेन सुरभिशीतलाभ्यां च कालशेयकाञ्जिकाभ्यां शेषमन्नमभोजयत्। सशेष एवान्धस्यसावतृप्यत्। अयाचत पानीयम्। अथ नवभृङ्गारसम्भृतमगुरुधूपधूपितमभिनवपाटलाकुसुमवासितमुत्फुल्लो-

त्पलग्रथितसौरभ वारि नालीधारात्मना पातयाम्बभूव । सोऽपि मुखोपहितशरावेण हिमशिशिरकणकरालिताऽरुणायमानाक्षिपक्ष्मा धारारवाभिनन्दितश्रवणः स्पर्शसुखोद्भिन्नरोमाञ्चककर्कशकपोलः परिमलप्रवालोत्पीडफुल्लघ्राणरन्ध्रो माधुर्यप्रकर्षावर्जितरसनेन्द्रियस्तदच्छं पानीयमाकण्ठं पपौ । शिरःकम्पसंज्ञावारिता च पुनरपरकरकेणाचमनमदत्त कन्या । वृद्धया तु तदुच्छिष्टमपोह्य हरितगोमयोपलिप्ते कुट्टिमे स्वमेवोत्तरीयकर्पटं व्यवधाय क्षणमशेत ।

परितुष्टश्च विधिवदुपयम्य कन्यां निन्ये । नीत्वैतदनुपेक्षः कामपि गणिकामवरोधमकरोत् । तामप्यसौ प्रियसखीमिवोपाचरत् । पतिं च दैवतमिव मुक्ततन्द्रा पर्यचरत् । गृहकार्याणि चाहीनमन्वतिष्ठत् । परिजनं दाक्षिण्यनिधिरात्माधीनमकरोत् । तद्गुणवशीकृतश्च भर्ता सर्वमेव कुटुम्बं तदायत्तमेव कृत्वा तदेकाधीनजीवितशरीरस्त्रिवर्गं निर्विवेश । तद्ब्रवीमि—'गृहिणः प्रियहिताय दारगुणाः' इति ।

—दंडी (दशकुमारचरितम् ६)

## १०—प्रणम्या दूरतः खलाः

अनिष्टोद्भावनरसोत्तरं हि भवति खलहृदयम् । को नामाऽस्य तत्त्वनिरूपणे समर्थः ? तथाहि—भीमो नवकद्वेषी, आश्रयाशोऽपि मातरिश्वा, अतिकटुरपि महारसः, सर्षपस्नेह इव करयुगलालितोऽपि शिरसा धृतोऽपि न कटुत्वं जहाति । तालफलरस इवापातमधुरः परिणामविरसस्तिक्तश्च । पादपराग

इवावधूतोऽपि मूर्धानं कषाययति। विपतरुप्रसूनमिव यथा यथाऽनुभूयते तथा तथा मोहमेव दृढयति। नीचदेशस्येव न वारिविरहोऽस्य जायते। निदाघदिवस इव बद्धमत्सरः सुमनसां सन्तापं वहति। अन्धकार इव दोषानुबन्धचतुरो विश्वकर्मावलोपनोद्यतश्च। रुद्र इव विरूपाक्ष, विष्णुरिव चक्रधरः। गङ्गाह्व इवोच्चैःश्रवा नदेशजप्रशंसी च। शरस्येव विभिन्नस्यापि मतं स्नेहं दर्शयन्‌ तक्राट इव हृदयं विलोडयति। यक्षवलिरिव आरमघोषमुखरो मण्डलभ्रमणकश्च। मातङ्ग इव स्ववशालोलमुखोऽधरीकृतदानश्च। वृषभ इव सुरभियानविकलः। कामीव गोत्रस्खलनविधुरो वामाध्वानुरक्तश्च। जीर्णरोग इव कलेवरे वर्चसि मन्दिमानमावहति। वन्धूक इव रक्तः कटपले विभावरीरक्तश्च। परेत इव बन्धुतापदर्शनः। परशुरिव भद्रश्रियमपि खण्डयति। कुदाल इव दलितगोत्रः क्षमाभाजः प्राणिनश्च निकृन्तति। रतिकील इव जघन्यकर्मलग्नो ह्लेपयति साधून्‌। दुष्टभूपधूर्तिरिव काननरचिरनुगतमपि यवमं सततं नानुमोदते। अवाजादेव जायन्ते, अकाण्डादेव प्ररोहन्ति खलव्यसनाङ्कुराः, दुरुच्छेदाश्च भवन्ति।

असतां हृदि प्रविष्टो दोषलवः करालायते। सतां तु हृदि न प्रविशत्येव। यदि कथमपि प्रविशति तदा पारद इव क्षणमपि न तिष्ठति। मृगा इव विनोदबिन्दोर्वशगा न भवन्ति माधव। सुखं जना हि भवादृशाः शरत्समया इव हरन्ति मित्रमण्डलस्य। न च सचेतना विसदृशमुपदिशन्ति। अचेतनानामपि मैत्री समुचितपक्षे निक्षिप्ता। तथाहि—माधुर्यशैत्यशुचित्वसन्तापशान्तिभिः पय इति। शब्दसाम्याच्च मित्रतामुपगतस्य तत्सङ्गमादभिवर्धितस्य क्षीरस्य क्वाथे परतो ममैव क्षयो युक्त इति विचिन्त्येव वारिणा क्षीयते।

—सुबन्धु (वासवदत्ता)

# ११—दहति निदाघो नितराम्

कदाचित्कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः सम्फुल्लमल्लिकाधवलाट्टहासो महाकालः। प्रत्यग्रनिर्जितस्यास्तमुपगतवतो वसन्तसामन्तस्य बालापत्येष्विव पयःपायिषु नवोद्यानेषु दर्शितस्नेहो मृदुरभूत्। अभिनवोदितश्च सर्वस्यां पृथिव्यां सकलकुसुमबन्धनमोक्षमकरोत्प्रतपन्नुष्णसमयः। स्वयमृतुराजस्याभिषेकार्द्रशिखामरकलापा इवागृह्यन्त कामिनीचिकुरचयाः कुसुमायुधेन। हिमदग्धसकलकमलिनीकोपेनेव हिमालयाभिमुखीं यात्रामदादंशुमाली।

अथ ललाटन्तपे तपति तपने चन्दनलिखितललाटिकापुण्ड्रकैरलकचीरचीवरसवीतैः स्वेदोदबिन्दुमुक्ताक्षवलयवाहिभिर्दिनकराराधननियमा इवागृह्यन्त ललनाललाटेन्दुभिः। चन्दनधूसराभिरसूर्यम्पश्याभिः कुमुदिनीभिरिव दिवसमसुप्यत सुन्दरीभिः। निद्रालसा रत्नालोकमपि नासहन्त दृशः, किमुत जरठमातपम्। अशिशिरसमयेन चक्रवाकमिथुनाभिनन्दिताः सरित इव तनिमानमानीयन्त मोडुपाः शर्वर्यः। अभिनवपट्टपाटलामोदसुरभिपरिमलं न केवलं जलम्, जनस्य पवनमपि पातुमभूदभिलाषो दिवसकरसन्तापात्।

क्रमेण च खरखगमयूखे, खण्डितशैशवे, शुष्यत्सरसि, सीदत्स्रोतसि, मन्दनिर्झरे, कातरकपोतकूजितानुबन्धबधिरितविश्वे, श्वसत्पतत्रिणि, करीषङ्कपमरुति, विरलवीरुधि, रुधिरकुतूहलिकेसरिकिशोरकलिह्यमानकठोरधातकीस्तवके, लोहितायमानमन्दारसिन्दूरितसीम्नि, घर्मसमेरितगर्मुति, तप्तपांशुकुकूलकातरविकिरे, विवरशरणश्वाविधे, रजनीराजयक्ष्मणि, कठोरीभवति निदाघकाले प्रावर्तन्तोन्मत्ता मातरिश्वानः।

सर्वतश्च क्वचित्स्वच्छन्दतृणचारिणो हरिणा, क्वचित्तरु-रन्ध्रविवरविवर्तिनो बभ्रव, क्वचिज्जटावलम्बिन कपिला, क्वचिच्छकुनिकुलकुलायपातिन श्येना, क्वचिद् धूमोद्गारमन्दरुचय, क्वचित् सकलजगद्ग्रासघस्मरा सभस्मका, क्वचित् वेणुशिखरलग्नमूर्तयोऽत्यन्तवृद्धा क्वचिदचनोपयुक्ताशिरोजतव क्षपिण, क्वचित्सर्वंगमभुज पीवान, क्वचिद्दग्धगुग्गुलवो रौद्रा क्वचिज्ज्वलितनेत्रदहनदग्धमकुसुमशरमदना कृतस्थाणुस्थितय, चटुलशिखा नर्तनारम्भारभटीनटा, स्वयमपि धूमसम्भोदसमुद्भूतिभिरिव भक्षयन्त, स्वेदिन इव विलीयमानमधुपटलगोलगलितमधूच्छिष्टवृष्टय काननेषु, खलतय इव परिशीर्यमाणशिखासहतयो महोपरेषु, गृहीतशिलाकवला इव ज्वलितसूर्यमणिशकलेषु शिलोच्चयेषु, प्रत्यदृश्यन्त दारुणा दावाग्नय ।

–बाणभट्ट (हर्षचरितम् २)

# १२—किं स्वर्णम् ? चारित्र्यम्; को निकषो ? विपदेका

पातयति महापुरुषान्सममेव बहूननादरेणैव ।
परिवर्तमान एकः कालः शैलानिवानन्तः ॥

अन्यस्मिन्नहनि समीपमस्य (हर्षस्य) राजकुलात् द्रुतगतिवशविशीर्यमाणालङ्कारझाङ्कारिणी 'क्व कुमारः, क्व कुमारः ?' इति प्रतिपुरुषं पृच्छन्ती वेलेति नाम्ना यशोवत्याः प्रतीहार्याजगाम । विषण्णलोकलोचनप्रत्युद्गता चोपसृत्य कुट्टिमन्यस्तहस्तयुगला गलन्तीभिः सिञ्चन्तीव शुष्यन्तं दशनदीधितिधाराभिराघूसरमधरमधोमुखी विज्ञापितवती— 'देव, परित्रायस्व, परित्रायस्व । जीवत्येव भर्तरि किमप्यध्यवसितं देव्या' इति ।

ततस्तदपरमाकर्ण्य च्युत इव सत्त्वेन, द्रुत इव दुःखेन, आक्रान्त इव चिन्तया, तुलित इव तापेन, अङ्कीकृत इवातङ्केनाप्रतिपत्तिरासीत् । आसीच्चास्य चेतसि प्रतिपन्नसंज्ञस्य— 'बहुशोऽपि हृदये दुःखाभिषङ्गो निपतन्नश्मनीव लोहप्रहारः कठिने हुतभुजमुत्थापयति न तु भस्मसात्करोति मे निरनुक्रोशस्य कायम्' इति ।

उत्थाय च त्वरमाणोऽन्तःपुरमगात् । तत्र च प्रविशन्नेव निर्यान्तीम्, दत्तसर्वस्वापतेयाम्, गृहीतमरणप्रसाधनाम्, जानकीमिव जातवेदसं पत्युः पुरः प्रवेक्ष्यन्तीम्, प्रत्यग्रस्नानार्द्रदेहतया श्रियमिव भगवतीं सद्यः समुद्रादुत्थितां, कुसुम्भवभ्रुणी वाससी दिवमिव तेजसी सान्ध्ये दधानाम्, वाष्प्या भर्तृभक्त्या च निजया प्रसाधिताम्, मूर्च्छया जरत्या च संस्तुतया धार्यमाणाम्, सख्या

पीडया च व्यसनसङ्गतया समालिङ्गिताम्, परिजनेन सन्तापेन च गृहीतसर्वावयवेन परीताम्, कुलपुत्रैरुच्छ्वसितैश्च महत्तरैरधिष्ठिताम्, कञ्चुकिभिर्दुःखैश्चातिवृद्धैरनुगतां मातरं ददर्श।

दूरादेव च बाष्पायमाणदृष्टिरभ्यधात्—'अम्ब, त्वमपि मां मन्दपुण्यं त्यजसि? प्रसीद। निवर्तस्व' इत्यभिदधान एव च सस्नेहमिव नूपुरमणिमरीचिभिश्चुम्ब्यमानचूडश्चरणयोर्न्यपतत्। देवी तु यशोवती तथा तिष्ठति पादनिहितशिरसि विमनसि प्रेयसि तनये गुरुणा गिरिणेवोद्वेगवेगेनावष्टभ्यमाना, कृतप्रयत्नापि निवारयितुं न शशाक बाष्पोत्पतनम्। कृतान्तं गर्हमाणा मुक्तकण्ठमतिचिरं प्राकृतप्रमदेव प्रारोदीत्।

प्रशान्ते च मन्युवेगे सस्नेहमुन्नमयामास सुतम्। सुतवदनविनिहितनिभृतनयनयुगला चिरं स्थित्वा पुनः पुनरायतं निःश्वस्यावादीत्—'वत्स, नासि न प्रियो निर्गुणो वा परित्यागार्हो वा। स्तन्येनैव सह त्वया पीतं मे हृदयम्। अस्मिंश्च समये प्रभूतप्रभुप्रसादान्तरिता त्वां च पश्यति दृष्टिः। अपि च पुत्रक, कुलकलत्रमस्मि चारित्रमात्रधना धर्मधवले कुले जाता। वीरजा वीरजाया वीरजननी च मादृशी पराक्रमक्रीता कथमन्यथा कुर्यात्। एवंविधेन पित्रा ते भरतभगीरथनाभागनिभेन नरेन्द्रवृन्दारकेण गृहीतः पाणिः। आसेवितं सेवासम्भ्रान्तानन्तसामन्तसीमन्तिनीसमावर्जितजाम्बूनदघटाभिषेकः शिरसा। लब्धो मनोरथदुर्लभो महादेवीपट्टबन्धसत्कारलाभो ललाटेन। आपीतौ युष्मद्विधैः पुत्रैर्मित्रकलत्रबन्दिवृन्दविधूयमानचामरमरुच्चलच्चीनांशुकधरौ पयोधरौ। सपत्नीनां शिरःसु निहितं नमन्निखिलकटककुटुम्बिनीकिरीटमणिवयमालार्चितं चरणयुगल-

कम्। एवं कृतार्थसर्वावयवा किमपरमपेक्षे क्षीणपुण्या ? मर्तुमविधवैव वाञ्छामि। न च शक्नोमि दग्धस्य स्वभर्तारार्यपुत्रविरहिता रतिरिव निरर्थकान् प्रलापान् कर्तुम्। मरणाच्च मे जीवितमेवास्मिन्समये साहसम्। अतिशीतलः पतिशोकानलादक्षयस्नेहेन्धनादस्मादनलः। दुःखदग्धानां च भूतिरमङ्गला चाप्रशस्ता च निरुपयोगा च भवति। वत्स, विधवानां यशसा स्थातुमिच्छामि लोके न वपुषा। तदहमेव त्वा तावत्तात प्रसादयामि न पुनर्मनोरथप्रातिकूल्येन कदर्थनीयास्मि।' इत्युक्त्वा पादयोरपतत्।

स तु ससम्भ्रममपनीय चरणयुगलम्, अवनमिततनुरुभयकरविधृतवपुषम् अवनितलगतशिरसम्, उदनमयन्मातरम्। दुर्निवारितां च शुचः समवधार्य, कुलयोषिदुचितां च तामेव श्रेयसीं मन्यमानः क्रियाम्, कृतनिश्चया च तां ज्ञात्वा तूष्णीमधोमुखोऽभवत्।

अभिनन्दति हि स्नेहकातरापि कुलीनता देशकालानुरूपम्। देव्यपि यशोवती परिष्वज्य समाघ्राय च शिरसि निर्गत्य चरणाभ्यामेव चान्तःपुरात्पौराक्रन्दप्रतिशब्दनिर्भराभिरुपरुध्यमानेव दिग्भिः सरस्वतीतीरं ययौ। तत्र च स्त्रीस्वभावकातरैर्दृष्टिपातैः प्रविकसितरक्तपङ्कजपुञ्जैरिवार्चयित्वा भगवन्तं भानुमन्तमिव मूर्तिरैन्दवी चित्रभानुं प्राविशत्।

इतरोऽपि मातृमरणविह्वलो बन्धुवर्गपरिवृतः पितुः पार्श्वं प्रायात्। अपश्यच्च स्वल्पावशेषप्राणवृत्तिं परिवर्त्यमानतारकं तारकराजमिवास्तमभिलषन्तं जनयितारम्। असह्यशोकोद्रेकाभिद्रुतश्च त्याजितः स्नेहेन धैर्यम्। आश्लिष्यास्य सकलदुर्मद-

महीपालमौलिमालालालितौ पादयोर्विमुक्तार्गलश्चिरं रुरोद ।

राजा तु तमुपरुध्यमानदृष्टिरविरलसलिलशब्दाभिन्नश्रवणः प्रत्यभिज्ञाय शनैः शनैरवादीत्—"पुत्र, नार्हस्येवं भवितुम् । भवद्विधा न ह्यमहासत्त्वाः । महासत्त्वता हि प्रथममवलम्बनं लोकस्य पश्चाद्राजबीजिता । सत्त्ववतां चाग्रणीः सर्वातिशयाधिष्ठितः क्व भवान्, क्व वैक्लव्यम् ? 'कुलप्रदीपोऽसि' इति दिवसकरसदृशतेजसस्ते लघूकरणमिव । 'पुरुषसिंहोऽसि' इति शौर्यपटुप्रज्ञोपबृंहितपराक्रमस्य निन्देव । 'क्षितिरियं तव' इति लक्षणाख्यातचक्रवर्तिपदस्य पुनरुक्तमिव । 'गृह्यतां श्रीः' इति स्वयमेव श्रिया परिगृहीतस्य विपरीतमिव । 'अध्यास्यतामयं लोकः' इत्युभयलोकविजिगीषोः पुनरुक्तमिव । 'स्वीक्रियतां कोशः' इति शशिकरनिकरनिर्मलयशःसंचयकाभिनिवेशिनो निष्पर्यायमिव । 'आत्मीक्रियतां राजकम्' इति गुणगणात्मीकृतजगतो गतार्थमिव । 'उह्यतां राज्यभारः' इति भुवनत्रयभारवहनोचितस्यानुचितनियोग इव । 'प्रजाः परिरक्ष्यन्ताम्' इति दीर्घदोर्दण्डार्गलितदिङ्मुखस्यानुवाद इव । 'परिजनः परिपाल्यताम्' इति लोकपालोपमस्यानुपङ्क्तिकमिव । 'सातत्येन शस्त्राभ्यासः कार्यः' इति धनुर्गुणकिणकलङ्कव्यालीकृतप्रकोष्ठस्य किमादिश्यते । 'निगृह्यतां चापलजातम्' इति नूतनतरवयसि निगृहीतेन्द्रियस्य निरवकाशैव मे वाणी । "निरवशेषतां शत्रवो नेयाः' इति सहजस्य तेजस एवैष चिन्ता ।" इत्येवं वदन्नेवापुनरुन्मीलनाय निमिमील राजसिंहो लोचने ।

अस्मिन्नेवान्तरे भूपालायुषेव तेजसा व्ययुज्यत । ततश्च लज्जमान इव नरपतिजीवितापहरणजनितादात्मापराधादधोमुखः समभवत् । भूपालाभावशोकशिखिनेवाम्लाप्यमानस्ताम्रतां प्रपेदे । मन्दं मन्दमप्रियप्रश्नार्थमिव लौकिकी स्थिति-

मनुवर्तमानोऽवातरद्दिव. । दिदृक्षुरिव जनेशाय जलाञ्जलिमपर-
जलनिधिसमीपमुपससर्प । सद्योदत्तजलाञ्जलिर्दु.खदहनदग्धमिव
करसहस्रमालोहितमाधत्त ।

—बाणभट्टः (हर्षचरितम् ५)

# १३—अहो प्रभावस्तपसाम् !

अनतिदूरमिव गत्वा दिशि सदा सन्निहितकुसुमफलैरारण्य-
स्थलीभिरुपशोभितप्रान्तम्, आगृहीतसमित्कुशकुसुममृद्भिरध्य-
यनमुखरशिष्यानुगतै. सर्वत. प्रविशद्भिर्मुनिभिरशून्योपकण्ठम्,
अनवरतश्रवणगृहीतवषट्कारवाचालशुककुलम्, अनेकसारिकोद्-
घुष्यमाणसुब्रह्मण्यम्, अरण्यकुक्कुटोपभुज्यमानवैश्वदेवबलि-
पिण्डम्, परिचितशाखामृगकराकृष्टनिष्कास्यमानप्रवेश्यमान-
जरदन्धतापसम्, इभकलभकार्वोपभुक्तपतितै· सरस्वतीभुजलता-
विगलितै. शङ्खवलयैरिव मृणालशकलैः कल्मापितम्, ऋषि-
जनार्थमेणकैर्विषाणशिखरोत्खन्यमानविविधकन्दमूलम्, अम्बु-
पूर्णपुष्करपुटैर्वनकरिभिरापूर्यमाणविटपालवालकम्, उपजात-
परिचयै. कलापिभिः पक्षपुटपवनसंधुक्ष्यमाणमुनिहोमहुताशनम्,
सुरभिविलेपनधरमपि सततामिर्भूतहव्यधूमगन्धम्, मातङ्गकुला-
ध्यासितमपि पवित्रम्, उल्लसितधूमकेतुशतमपि प्रशान्तोपद्रवम्,
परिपूर्णद्विजपतिमण्डलमनाथमपि सदा संनिहितलरुगहनान्ध-
कारम्, अतिरमणीयम्, अपरमिव ब्रह्मलोकम् आश्रम-
मपश्यम् ।

यत्र च मलिनता हविर्धूमेषु न चरितेषु, मुखरागः शुकेषु न कोपेषु, तीक्ष्णता कुशाग्रेषु न स्वभावेषु, चञ्चलता कदलीदलेषु न मनःसु, चक्षूरागः कोकिलेषु न परकलत्रेषु, मेखलाबन्धो व्रतेषु नेर्ष्याकलहेषु, स्तनस्पर्शो होमधेनुषु न कामिनीषु, पक्षपातः कृकवाकुषु न विद्याविवादेषु, भ्रान्तिरनलप्रदक्षिणासु न शास्त्रेषु, वसुसङ्कीर्तनं दिव्यकथासु न तृष्णासु, गणना रुद्राक्षवलयेषु न शरीरेषु, मुनिबालनाशः क्रतुदीक्षया न मृत्युना, रामानुरागो रामायणेन न यौवनेन, मुखभङ्गविकारो जरया न धनाभिमानेन। यत्र च महाभारते शकुनिवधः, पुराणे वायुप्रलपितम्, वयःपरिणामेन द्विजपतनम्, उपवनचन्दनेषु जाड्यम्, अग्नीनां भूतिमत्त्वम्, एणकानां गीतश्रवणव्यसनम्, शिखण्डिनां नृत्यपक्षपातः, भुजङ्गमानां भोगः, कपीनां श्रीफलाभिलाषः, मूलानामधोगतिः।

तत्र च तापसकुमारिकाभिरालवालदत्तपीतपिष्टिपञ्चाङ्गुलस्य परिमण्डलतया विस्तीर्णावकाशस्य रक्ताशोकतरोरधश्छायायामुपविष्टम्, समन्तान्महर्षिभिः परिवृतम्, स्थैर्येणाचलानां गाम्भीर्येण सागराणां तेजसा सवितुः प्रशमेन तुषाररश्मेर्निर्मलतयाम्बरतलस्य संविभागमिव कुर्वाणम्, वैनतेयमिव स्वप्रभावोपात्तद्विजाधिपत्यम्, कमलासनमिवाश्रयगुरुम्, जरच्चन्दनतरुमिव भुजङ्गनिर्मोकधवलजटाकुलम्, प्रशान्तवारणपतिमिव प्रलम्बकर्णवालम्, बृहस्पतिमिवाजन्मसंवर्धितकूर्चम्, दिवसमिवोद्यदर्कबिम्बभास्वरमुखम्, शरत्कालमिव क्षीणवर्षम्, शान्तनुमिव प्रियसत्यव्रतम्, अम्बिकाकरतलमिव रुद्राक्षवलयग्रहणनिपुणम्, शिशिरसमयसूर्यमिव कृतोत्तरासङ्गम्, वडवानलमिव सन्ततपयोभक्षम्, शून्यनगरमिव दीनानाथविपन्नशरणम्, पशुपतिमिव भस्मपाण्डुरोमाश्लिष्टशरीरम्, भगवन्तं जाबालिमपश्यम्।

अवलोक्य चाहमचिन्तयम्—'अहो प्रभावस्तपसाम् ! इयमस्य शान्तापि मूर्तिरुत्तप्तकनकावदाता परिस्फुरन्ती सौदामिनीव चक्षुषः प्रतिहन्ति तेजांसि, सततमुदासीनापि महाप्रभावतया भयमिवोपजनयति प्रथमोपगतस्य । पुण्यानि हि नामग्रहणान्यपि महामुनीनाम्, किं पुनर्दर्शनानि । धन्यमिदमाश्रमपदमयमधिपतिर्यत्र । बहलाज्यधूमपटलमलिनीकृताश्रमस्य भगवतः प्रभावाद्भीतमिव रविकिरणजालमपि दूरतः परिहरति तपोवनम् । एते च पवनलोलपुञ्जीकृतशिखाकलापा रचिताञ्जलय इवात्र मन्त्रपूतानि हवींषि गृह्णन्त्येतत्प्रीत्याशुशुक्षणयः । तरलितदुकूलवल्कलोऽयं चाश्रमलताकुसुमसुरभिपरिमलो मन्दमन्दचारी सशङ्क इवास्य समीपमुपसर्पति गन्धवाहः । प्रायो महाभूतानामपि दुरभिभवानि भवन्ति तेजांसि । सर्वतेजस्विनामयं चाग्रणीः ।

'एष प्रवाहः करुणारसस्य, सन्तरणसेतुः संसारसिन्धोः, आधारः क्षमाम्भसाम्, परशुस्तृष्णालतागहनस्य, सागरः सन्तोषामृतरसस्य, उपदेष्टा सिद्धिमार्गस्य, अस्तगिरिरसद्ग्रहस्य मूलमुपशमतरोः, नाभिः प्रज्ञाचक्रस्य, स्थितिवंशो धर्मध्वजस्य, तीर्थं सर्वविद्यावताराणाम्, वडवानलो लोभार्णवस्य, निकषोपलः शास्त्ररत्नानाम्, दावानलो रागपल्लवस्य, मन्त्रः क्रोधभुजङ्गस्य, दिवसकरो मोहान्धकारस्य, अर्गलाबन्धो नरकद्वाराणाम्, कुलभवनमाचाराणाम्, आयतनं मङ्गलानाम्, अभूमिर्मदविकाराणाम्, दर्शकः सत्पथानाम्, उत्पत्तिः साधुतायाः, नेमिरुत्साहचक्रस्य, आश्रयः सत्त्वस्य, प्रतिपक्षः कलिकालस्य, कोशस्तपसः, सखा सत्यस्य, क्षेत्रमार्जवस्य, प्रभवः पुण्यसंचयस्य, अदत्तावकाशो मत्सरस्य, अरातिर्विपत्तेः, अस्थानं परिभूतेः, अननुकूलोऽभिमानस्य, असम्मतो दैन्यस्य, अनायत्तो रोषस्य, अनभिमुखः सुखानाम् ।

'अस्य भगवतः प्रसादादेवोपशान्तवैरमपगतमत्सरं तपोवनम् ।

अहो प्रभावो महात्मनाम्! अत्र हि शाश्वतिकमपहाय विरोधमुपशान्तात्मानस्तिर्यञ्चोऽपि तपोवनवसतिसुखमनुभवन्ति। तथा हि एष विकचोत्पलवनरचनानुकारिणमुत्पतच्चारुचन्द्रकशतं हरिणलोचनद्युतिशबलमभिनवशाद्वलमिव विशति शिखिनः कलापमातपाहतो निःशङ्कमहिः। अयमुत्सृज्य मातरमजातकेसरैः केसरिशिशुभिः सहोपजातपरिचयः क्षरत्क्षीरधारं पिबति कुरङ्गशावकः सिंहीस्तनम्। एष मृणालकलापाशङ्किभिः शशिकरधवलं सटाभारमामीलितलोचनो बहु मन्यते द्विरदकलभैराकृष्यमाणं मृगपतिः। इदमिह कपिकुलमपगतचापलमुपनयति मुनिकुमारकेभ्यः स्नातेभ्यः फलानि। एते च न निवारयन्ति मदान्धा अपि गण्डस्थलीभाञ्जि मदजलपाननिश्चलानि मधुकरकुलानि सञ्जातदयाः करिणः। किं बहुना, तापसाग्निहोत्रधूमलेखाभिरुत्सर्पन्तीभिरनिदाघमुपपादितकृष्णाजिनोत्तरासङ्गशोभाः फलमूलभृतो वल्कलिनो निश्चेतनास्तरवोऽपि सनियमा इव लक्ष्यन्तेऽस्य भगवतः। किं पुनः सचेतनाः प्राणिनः' इति।

—बाणभट्ट (कादम्बरी)

# १४—अतिगहनं तमो यौवनप्रभवम्

निसर्गत एवाभानुभेद्यमरत्नालोकोच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम्। गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिमरूपत्वममानुषशक्तित्वं चेति महतीय खल्वनर्थपरम्परा। सर्वाविनयानामेकैकमप्येषामायतन किमुत समवायः। यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः। अनुज्झितधवलतापि सरागैव भवति यूनां दृष्टिः। अपहरति च वात्येव शुष्कपत्रं समुद्भूतरजोभ्रान्तिरतिदूरमात्मेच्छया यौवनसमये पुरुषं प्रकृतिः। इन्द्रियहरिणहारिणी च सततमतिदुरन्तेयमुपभोगमृगतृष्णिका। नवयौवनकषायितात्मनश्च सलिलानीव तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः। नाशयति च दिङ्मोह इवोन्मार्गप्रवर्तकः पुरुषमत्यासङ्गो विषयेषु। गुरुवचनममलमपि सलिलमिव महदुपजनयति श्रवणस्थितं शूलमभव्यस्य।

अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखमुपदेशगुणाः। गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षममजलं स्नानम्, अनुपजातपलितादिवैरूप्यमजरं वृद्धत्वम्, अनारोपितमेदोदोषं गुरुकरणम्, असुवर्णविरचनमग्राम्यं कर्णाभरणम्, अतीतज्योतिरालोकः, नोद्वेगकरः प्रजागरः। विशेषेण तु राज्ञाम्। विरला हि तेषामुपदेष्टारः। अहङ्कारदाहज्वरमूर्च्छान्धकारिता विह्वला हि राजप्रकृतिः। अलीकाभिमानोन्मादकारीणि धनानि। राज्यविषविकारतन्द्राप्रदा राजलक्ष्मीः।

आलोकयतु तावत्कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम्। न ह्येवंविधमपरमपरिचितमिह जगति किञ्चिदस्ति यथेयमनार्या। लब्धापि खलु दुःखेन परिपाल्यते। दृढगुणपाशसंदाननिष्पन्दीकृतापि नश्यति। न परिचयं रक्षति। नाभिजनमीक्षते। न वैदग्ध्यं

गणयति। न त्यागमाद्रियते। न विशेषज्ञतां विचारयति। कमलिनीसञ्चरणव्यतिकरलग्ननलिननालकण्टकेव न क्वचिन्निर्भरमाबध्नाति पदम्। यथा यथा चेयं चपला दीप्यते तथा तथा दीपशिखेव कज्जलमलिनमेव कर्म केवलमुद्वमति। न हि तं पश्यामि यो ह्यपरिचितयानया न निर्भरमुपगूढो यो वा न विप्रलब्धः। नियतमियमालेख्यगतापि चलति, पुस्तकमय्यपीन्द्रजालमाचरति, उत्कीर्णापि विप्रलभते, श्रुताप्यभिसन्धत्ते, चिन्तितापि वञ्चयति।

एवंविधयापि चानया दुराचारया कथमपि दैववशेन परिगृहीता विक्लवा भवन्ति राजानः, सर्वाविनयाधिष्ठानतां च गच्छन्ति। तेषां दाक्षिण्यं प्रक्षाल्यते, हृदयं मलिनीभवति, सत्यवादितापह्रियते गुणाश्चोन्मार्ग्यन्ते। केचिच्छ्रमवशशिथिलशकुनिगलपुटचपलाभिः सद्योतोन्मेषमुहूर्तमनोहराभिर्मनस्विजनगर्हिताभिः सम्पद्भिः प्रलोभ्यमाना रागावेशेन बाध्यमाना विह्वलतामुपयान्ति। आसन्नमृत्यव इव बन्धुजनमपि नाभिजानन्ति। अदूरदर्शिनः पापेनेवाध्मातमूर्तयो भवन्ति। तदवस्थाश्च व्यसनशतशरव्यतामुपगता वल्मीकतृणाग्रावस्थिता जलबिन्दव इव पतितमप्यात्मानं नावगच्छन्ति।

अपरे, तु स्वार्थनिष्पादनपरैर्धनपिशितग्रासगृध्रैरास्थाननलिनीबकैर्द्यूतं विनोद इति, पानं विलास इति, प्रमत्ततां शौर्यमिति, गुरुवचनावधीरणमपरप्रणेयत्वमिति, स्वच्छन्दतां प्रभुत्वमिति, तरलतामुत्साहमिति दोषानपि गुणपक्षमध्यारोपयद्भिरन्तः स्वयमपि विहसद्भिः, प्रतारणकुशलैर्धूर्तैरमानुषोचिताभिः स्तुतिभिः प्रतार्यमाणाः प्रारब्धदिव्योचितचेष्टानुभावाः सर्वजनस्योपहास्यतामुपयान्ति। दर्शनप्रदानमप्यनुग्रहं गणयन्ति। दृष्टिपातमप्युपकारपक्षे स्थापयन्ति। स्पर्शमपि पावनमाकलयन्ति। मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः,

नाभिवादयन्त्यभिवादनार्हान्, नाभ्युत्तिष्ठन्ति गुरून् । जरावैक्लव्यप्रलपितमिति पश्यन्ति वृद्धजनोपदेशम् । आत्मप्रज्ञापरिभव इत्यसूयन्ति सचिवोपदेशाय । कुप्यन्ति हितवादिने । सर्वथा तमभिनन्दन्ति, तं पार्श्वे कुर्वन्ति, तं संवर्धयन्ति, तं बहु मन्यन्ते, तमाप्ततामापादयन्ति योऽहर्निशमनवरतमुपरचिताञ्जलिरधिदैवतमिव विगतान्यकर्तव्यः स्तौति, यो वा माहात्म्यमुद्भावयति ।

तदेवंप्राये राज्यतन्त्रेऽस्मिन्महामोहकारिणि च यौवने कुमार तथा प्रयतेथा यथा नोपहस्यसे जनैः, नोपालभ्यसे सुहृद्भिः, न प्रतार्यसे विटैः, नावलुप्यसे सेवकवृकैः, न प्रलोभ्यसे वनिताभिः, नोन्मत्तीक्रियसे मदनेन, नाक्षिप्यसे विषयैः, नावकृष्यसे रागेण, नापह्रियसे सुखेन । तरलहृदयमप्रतिबुद्धं च मदयन्ति धनानि । विद्वांसमपि धीरमप्यभिजातमपि पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीः । कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम् । अवनमय द्विषतां शिरांसि । उन्नमय स्वबन्धुवर्गम् ।

—बाणभट्टः (कादम्बरी)

## १५—प्रवृत्तिनिवृत्तिलक्षणो वै धर्मः

स भगवान् सृष्ट्वेदं जगत्, तस्य च स्थितिं चिकीर्षुर्मरीच्यादीनग्रे सृष्ट्वा, प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तम्। ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिधर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास। द्विविधो हि वेदोक्तो धर्मः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च। तत्रैको जगतः स्थितिकारणं प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्यः स धर्मो ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्च श्रेयोऽर्थिभिरनुष्ठीयमानो दीर्घेण कालेनानुष्ठातॄणां कामोद्भवाद्धीयमानविवेकविज्ञानहेतुकेनाऽधर्मेणाभिभूयमाने धर्मे, प्रवर्धमाने चाऽधर्मे, जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन कृष्णः किल सम्बभूव। ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मः, तदधीनत्वाद्वर्णाश्रमभेदानाम्।

स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा सम्पन्नस्त्रिगुणात्मिकां वैष्णवीं स्वां मायां मूलप्रकृतिं वशीकृत्याजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन् स्वमायया देहवानिव जात इव लोकानुग्रहं कुर्वन्निव लक्ष्यते। स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया वैदिकं धर्मद्वयमर्जुनाय शोकमोहमहोदधौ निमग्नायोपदिदेश, गुणाधिकैर्हि गृहीतोऽनुष्ठीयमानश्च धर्मः प्रचयं गमिष्यतीति। तं धर्मं भगवता यथोपदिष्टं वेदव्यासः सर्वज्ञो भगवान् गीताख्यैः सप्तभिः श्लोकशतैरुपनिबबन्ध।

निःश्रेयसं च सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठारूपाद्धर्माद् भवति। तथेममेव गीतार्थधर्ममुद्दिश्य भगवतैवोक्तम्—'स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदनम्' इत्यनुगीतासु। किं चान्यदपि तत्रैवोक्तम्—'नैव धर्मी न चाऽधर्मी न चैव हि शुभा-

शुभी, य स्यादेकासने लीनस्तूष्णीं किञ्चिदचिन्तयन्' इति; 'ज्ञानं संन्यासलक्षणम्' इति च। इहाऽपि चान्त उक्तमर्जुनाय—'सर्वधर्मान् परित्यज्य मामेकं शरण व्रज' इति।

अभ्युदयार्थोऽपि यः प्रवृत्तिलक्षणो धर्मो वर्णाश्रमांश्चोद्दिश्य विहित. स च देवादिस्थानप्राप्तिहेतुरपि सन्नीश्वरार्पणबुद्ध्यानुष्ठीयमानः सत्त्वशुद्धये भवति फलाभिसन्धिवर्जित.। शुद्धसत्त्वस्य च ज्ञाननिष्ठायोग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते। यथा चेममर्थमभिसन्धाय वक्ष्यति—'ब्रह्मण्याधाय कर्माणि यतचित्ता जितेन्द्रियाः। योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये।'

—शंकराचार्यः (गीताभाष्योपक्रमणिका)

## १६—पितृवत् परकन्यासु

वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च।
तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृति॥

तोरणदुर्गे तु रसनारी काभिश्चन मूर्च्छितप्रायाभिरुत्थाप्य समानीताभिः पुनः प्राप्तसंज्ञाभिः चेटीभिः महिला. मञ्चमान्दी-पल्यङ्कवितानतूलिकोपबर्हादिसकलपरिच्छदपरिष्कृतायाम् अतिरम्यहर्म्याट्टालिकायामवरुद्धा—'क्वाऽऽयाता? केन संयता? किं भाति?' इति किमपि न वेत्ति स्म। तत्परिचर्यायामितरा

महाराष्ट्रदेशीया अपि दास्य आसन्, किन्तु ता अपि रसनार्या बहुश प्रलोभिता अपि सप्रश्रय पृष्टा अपि तेषु तेषु विषयेषु वाचमेव न यच्छन्ति स्म ।

'क एवमाद्रियते ? कस्य कक्षे आपतिता ? कोऽधुनापि मर्यादा न भनक्ति ?' इति तया किमपि ज्ञातु न शक्यते स्म ।

अथैकदाऽट्टालिकाया पर्यटन्त्या, दक्षिणस्या सुदूर विस्तृताना काननानाम्, अभ्रलिहाना शैलशिखराणाम्, कपोतानाम्, क्रौञ्चानाम्, कुरराणा च शोभा पश्यन्त्या अकस्मादथाविपादध्वनिरिव बहूनाम् । झटिति तत आगत्य द्वारोपरिस्थगवाक्षाच्चाऽवलोकितवती यदेक ईषच्छ्यामल सुन्दरो मरकतमणिमहामालालसितगलकमनीयो युवाऽऽगच्छतीति । एष एव च सम्बोभोति पतितवृद्धोऽस्मल्लुण्ठकगणस्येति मन्यमाना, किञ्चिद् भीतेव, स्तब्धेव, खिन्नेव, क्षुभितेव, उद्विग्नेव च सा समवित्त ।

अथ रसनारी स्वोपवेशदेश प्रविश्य स्विन्ना गण्डस्थली यावत्पटान्तेन परिमार्ष्टि, तावत्प्रतिसीरामुत्क्षिप्य झटिति प्रविश्य शिरोनमनपुर सरमादराचार विदधदवलोकित स एव वीरवर । इय तमादराङ्कित , तद्वचनसुधाधारापिपासिताभ्यामिव कर्णाभ्या परमकलानताजडाकृताभ्यामिव नयनाभ्या चित्रार्पितेवाभूत् । महाराष्ट्रराजस्तु बद्धकरसम्पुट समवतत । न च बिन्दुमपि विसर्गमपि चाब्रूत । तत परवीना तदाकारसौजन्यलावण्यगाम्भीर्यादराचाराद्यवलोकनमोहिता रसनारी स्वयमेवारभ्य एवमालपत् ।

रसनारी—आगम्यतामियमासन्दी सनाथ्यताम् ।

शिवराज —यदाज्ञाप्यतेऽत्रभवत्या ।

[इत्येकस्यामासन्द्या महाराष्ट्रराज , अपरस्या रसनारी, सार्द्धहस्तोच्छ्रायाया कौशेयवसनाच्छन्नाया सजलकुसुमस्तवकालङ्कृतमध्याया-

वर्तुलपीठिकायाः प्राक् प्रत्यक् चोपाविक्षताम् । ]

रसनारी—वीर, अतिसमादृताऽपि सुखं स्थापिताऽपि दुःखिताऽस्मितमाम्, यतो यत्नैरपि न ज्ञातुमशकं निजधन्यवादभाजनं धन्यधन्यं कमपि मान्यवदान्यम्; यत्प्रदत्तं द्राक्षादाडिमजातमास्वादमास्वाद केकिकेकाकोकिलकूजितानि श्रावं श्रावं दर्शं दर्शं चोत्यकाशाद्वलेषु शम्बरशल्लकीशशकशिवापलायनानि दिनानि गमयामि।

शिवराजः—आर्ये, अपि कस्यापि महाराष्ट्रवीरस्य शिवराज इति नामधेयं श्रीमत्या कर्णशष्कुलीमस्पार्क्षीत् ?

रसनारी (क्षणं चिन्तयित्वेव)—किं पार्वतोन्दुरुः शिव इति ?

शिवराजः ('दिल्लीकलङ्का वराका एते मां पार्वन्तोन्दुरुमेवाऽऽख्यान्ति' इति स्वगतमेव विचार्य किञ्चिद् ह्रीण इव पुनरुन्नतीभूय)—भद्रे, महाराष्ट्रराजः शिववीरः।

रसनारी (सनीघ्यन्)—तत्किं पार्वतोन्दुरुः कोऽप्यन्यः ?

शिवराजः—अत्रभवती न वेत्ति मर्मेतस्य। अस्माकं सदैव युद्धानि भवन्ति श्रीमत्यास्तातचरणैः सह। वयं सदैव तान् विजयामहे। तदीयानि कदर्याणि आचरणान्यवलोक्य च 'दिल्लीकलङ्का इमे' इति कथयामः। ते च दग्धहृदया अस्मान् 'पार्वतोन्दुरून्' प्रचक्षते, परन्तु यथा तव तातस्तत्र राजा, तथा शिववीरोऽत्र राजा। तव तातस्य प्रजासु तु, तेषां दारा अपह्रियन्ते, येषां देवमन्दिराणि निपात्यन्ते, येषां च तीर्थस्थानानि बलाद्विलोप्यन्ते, ते प्रतिप्रभातं प्रतिसायं च बाष्पवारिबिन्दुसन्दोहैराननं क्षालयन्तः, दग्धहृदयाः, धमद्धमद्धमनीधावमानरुधिरधारादुर्धर्षवदनाः, हस्तावुन्नमय्य तव तातस्योच्छेदाय शपन्ते। शिव-

राज-राज्ये तु प्रजा प्रतिक्षणमाशीराशीनुच्चारयन्ति । त्वत्पितृ-राज्यं बहिरेव, न तु प्रजानामन्तःकरणे । शिवस्य तु राज्यं महाराष्ट्रदेशीयप्रजानामन्तर्बहिश्च ।

रसनारी (सलज्जम्)—ननु किं शिवराज्ये यवना अपि मोदन्ते ?

शिवराजः—सर्वासां प्रजानां समान एव मोदः, न भवति शासनकाले जातिनामाद्युट्टङ्कनमावश्यकम् ।

रसनारी—ननु किमित्यहमपहारितास्मि ?

शिवराजः—मा स्म भूच्छ्रीमन्या काचन बलात्कारभीतिः । बहुभी रुधिरप्रवाहैर्भगवती विश्वम्भरा स्नापिता, बहवश्च युद्धाहतवीररमण्यो रोदिताः, इति यदि भवतीमाश्रित्य भवत्याः पित्रा सह सन्धातुं शक्येत, तदर्थमेव समानीता मङ्गल-मय्यत्र भवति । नैतद् मौद्गलराज्यम्, यत्र प्रजानामपि भवेद् बलात्कारसाध्वसम् । अत्र तु महाराष्ट्राणां राज्यम्, यत्र परि-पन्थिनामपि युवजनमनोमोहनेनातिमधुरेण कौमारात् परेण वयसाऽऽलिङ्गिता अपि सौन्दर्यसारविरचिता इवापि दुहितरः सम्मान्यन्ते, न त्ववहेल्यन्ते । अत्र भवत्येवात्र प्रमाणम् ।

रसनारी (तद्वाकर्ण्य शिरो नमयित्वा, अपाङ्गक्षिप्तलोलतार-लोचनेन शिवमुखमसकृदीक्षमाणा, उरोजयोः स्रस्तमिव वस्त्रं पुनः स्कन्धयोः क्षिप्त्वा)—अथ क्वासौ महाराष्ट्रराजो मोदितसकल-समाजो रणधीरः शिववीरः ? तं दिदृक्षते एष जनः ।

शिवराजः (समुत्थाय)—एषोऽत्र भवत्याः सम्मुख एव बद्धकरसम्पुट उपतिष्ठते शिवः । तदाज्ञाप्यतां काचन सेवा ।

रसनारी (ससम्भ्रममुत्थाय)—आः ! एवमेतत् ? अपि श्रीमानेव महाराष्ट्रराजः, यो मामेव धृष्टवादिनीं मनोरमै-

र्नभ्रालापैर्लज्जयते ? उपविश्यतामुपविश्यताम् ! मनसाऽप्यकल्पनीयोऽयमीदृशः स्वभावः, यत् सपत्न्योऽप्यादरेष्वेव सयत्नो भवान् ।

ततः परमुपविष्टयोर्मुहूर्तं यावद् बहव आलापास्तयोः परस्परं चकितयोर्मुदितयोरनुरक्तयोश्चाभूवन् ।

—अम्बिकादत्तव्यासः (शिवराजविजयः)

## १७—वृक्षाणां परिषत्

वृक्षाणां परिषदियम् । अत्राश्वत्थो वक्ताऽपरे श्रोतारः । निरन्तरमहवामाहृयमेतेषां भाषासु सम्यगभिज्ञा एव । तद् यदि भवद्भ्यो रोचेत वयमेतेषां प्रजल्पनमनुवदामः ।

सञ्चालितपल्लवकराग्रः सुमहानश्वत्थो वदति—भो भो वनस्पतिकुलप्रदीपा महापादपाः, कुसुमकोमलदन्तरुचो लताकुलललनाश्च, सावहिताः शृण्वन्तु भवन्तः । अद्य मानववार्तैवास्मत्समालोच्यविषयः । मानवा नाम सर्वासु सृष्टिधारासु निकृष्टतमा सृष्टिः । समन्तादभिनवोत्तरविलक्षणसृष्टिमुत्पादयता भगवता जगत्सवित्रा यादृग् बुद्धिप्रकर्षः सृष्टिनैपुण्यं च

प्रदर्शनम्, मानवमर्गं विदधता पुनरनेन तत्सर्वमेकपद एवापहारितम्।

प्राक्तनकर्मप्रभावाज्जडत्वमापन्नानामस्माक वार्ता तावदस्तु दूरे, जीवसृष्टिप्रवाहेषु मानवा इव परप्रतारका स्वार्थसाधनपरा मायाविन कपटव्यवहारकुशला हिंसानिरता जीवा न विद्यन्ते (सर्वे स्वशाखाघर्षणं कृत्वा आनन्दं सूचयन्ति)। भवन्तो नित्यमेवारण्यचारिण सिंहव्याघ्रप्रमुखान् हिंस्रस्वभावतया प्रसिद्धान् श्वापदानवलोकयन्ति प्रत्यक्षम्, तेषां नित्यनैमित्तिकक्रियाकलापांश्च पश्यन्ति, ततो भवन्त एव सानुनय पृच्छ्यन्ते—कथयन्तु भवन्त याथातथ्येन किमेते हिंसादिक्रियासु मनुष्येभ्यो भृश गरिष्ठा ? श्वापदानां हिंसाकर्म किल प्रवृत्तितानयमोद्दीप्तजठरानलनिर्वाणमात्रप्रयोजनकम्, क्रूरचेष्टितानि च स्वोदरपूर्तिपर्यन्तायमानानि। प्रशान्ते तु जठरानले सकृदुपजातायां स्वोदरपूर्तौ नहि ते करतलगतानपि हरिणशशकादीनुपघ्नन्ति, न वा तथाविधदुर्बलजीवघातार्थमटवीतोऽटवीं समुद्गत पारभ्रमन्ति, प्रत्युत मुनिव्रता इव शान्तभावमापन्ना निश्चेष्टा विविक्तविजनप्रदेशमाश्रित्य विश्राम्यन्ति।

मनुष्याणां हिंसावृत्तिस्तु निरवधि। पशुहत्या तु तेषामाक्रीडनम्, केवल विक्लान्तचित्तविनोदाय महारण्यमुपगम्य ते यथेच्छ निर्दयं च पशुघातं कुर्वन्ति। मनुष्या यथा मृगयामपदिश्य हिंसावृत्तेश्चरितार्थता सम्पादयन्ति, हिंस्रस्वभावा अपि श्वापदाः किं कदाचित् मनुष्यालयमाविश्य तादृशमतिदारुणं कर्म समनुतिष्ठन्ति ? (सर्वेषां करतलघोषम्)। यथैहिकसुखलिप्सया मनुष्या समुत्साहेन जीवहिंसां सम्पादयन्ति करुणस्यानिनिष्ठुर

क्रूरभावं प्रकटयन्ति, पारत्रिकविशुद्धनित्यसुखप्राप्त्याशयापि ते तथैव महोत्साहेन महोत्सवपूर्वकं स्वाभीष्टदेवताग्रतः सर्वथा-निरपराधान् रोरूद्यमानानासन्नमृत्युशङ्काविपमानकलेवरान् पशून् बलादुपहृत्य स्वहृदयस्यातिकर्कशनृशंसतायाः परिचयं ददति। वस्तुतस्तेषां पशूपहारव्यापारमालोक्य जडानामप्यस्माकं विदीर्यते खलु हृदयम्।

पशूनां न केवलं भक्ष्यनियमस्तृप्तिश्च तेषामनायाससाध्या, ते स्वोदरपूर्तिमात्रपर्याप्त भक्ष्यवस्तु समधिगत्यैव परमां परितृप्तिं लभन्ते, नाधिकमाकाङ्क्षन्ति। भक्ष्यवस्तुनीवान्यत्र विषयेष्वपि सुलभः खल्वमीषां तृप्तियोगो यस्तावन्मानवेषु सुदुर्लभ एव। तृप्तिलाभस्तु न विलिखितो विधात्रा मनुष्यभाग-धेयेषु। निरन्तरमात्मोन्नतिमभिविधित्सवोऽव्याहतलोभविक्षो-भितहृदया मनुजन्मानः किल प्रतिक्षणं स्वार्थसाधनाय सर्वात्मना प्रवर्तन्ते, न धर्ममनुधावन्ति, न सत्यमनुबध्नन्ति, परं तृणवदुपेक्षन्ते स्नेहम्, लोष्टवत् परित्यजन्ति शौचम्, अहितमिव परिहरन्त्या-र्जवम्, अमङ्गलमिवोपघ्नन्ति विश्वासम्, न स्वल्पमपि बिभ्यति पापाचारेभ्य., न किञ्चिदपि लज्जन्ते मुहुरनृतव्यवहारात्, न हि क्षणमपि विरमन्ति परपीडनात्, न वा कदापि विमुखीभवन्ति महतोऽपकृत्यात्, केवलं सिसाधयिषन्ति स्वार्थम्। यथायथैव स्वार्थसिद्धिर्घटते तथातथैव परिवर्धतेऽमीषां गरीयसी विषय-पिपासा।

न केवलमेते पशुभ्यो निकृष्टास्तृणेभ्योऽपि निस्सारा एव। तृणानि खलु प्रबलवात्योद्गमाव्यवहितपूर्वक्षणपर्यन्तं न किञ्चि-न्मात्रं विचलन्ति, न वा स्वल्पमात्रमपि विकम्पन्ते, किन्तु निर्भी-

कानीवाविशङ्कितचित्तानीव सर्वथा सुस्थिराण्यवतिष्ठन्ते, किं च वात्यया सह स्वशक्तितः सुचिरमभियुध्य सम्मुखसमरप्रवर्तमाना वीरपुरुषा इव शक्तिक्षये क्षितितले निपतन्ति, न तु कदाचित् कापुरुषा इव स्वस्थानमपहाय द्रुतं प्रपलायन्ते। मनुष्याः पुनः स्वचेतसाऽग्रत एव सुदूरभविष्यत्कालसङ्घटिष्यमाणं कर्मापि विप-त्पातमात्रलक्ष्य परिकम्पमानकलेवरा भीतभीता निरन्तरगुरु-चिन्ताक्रान्तहृदया दुःखदुःखेन समयमतिवाहयन्ति, परिकल्पयन्ति च पर्याकुला बह्वायासैर्बहुविधान् प्रतीकारोपायान्। येन मनुष्य-जीवने शान्तिसुखं मनोरथपथादतिक्रान्तमेव। अथ भवितव्यताया अवश्यम्भावितया दुर्लङ्घ्यतया च नियतिनियमानां तेषां सर्व-प्रतीकारप्रयत्नान् विफलीकृत्य यदि कदाचित् समापतति तावत् तथाकथिताऽऽपत् तदा तेषामेव पद एवान्तर्धत्ते विद्यावत्ताभिमानः, खर्वीभवति तीक्ष्णबुद्धिनैपुण्यप्रभवो गर्वः, प्रलीयते च परिकल्पिता-त्मसर्वज्ञतासमुदितः सुमहानहङ्कारः। ततश्च समुदेति सद्य एव कोऽपि किंकर्तव्यविमूढभावजनितो हृदयावसादः, भृशं परिक्षीयते चिरपोषिता नास्तिकत्वबुद्धिः सुदूरमपगच्छति च सा परमेश्वर-प्रतिद्वन्द्विता, येन ते तदानीमात्मत्राणाय बद्धाञ्जलयः साश्रुनयना प्रणमन्तः करुणं विलपन्तश्च शरणं समुपयान्ति जगच्छरण्यं जगदीश्वरम्, समुपासते च श्रद्धया निराकारस्याप्यस्य बहुविधाः परिकल्पिता मूर्तीः। परित्यजन्ति च सर्वविधामात्मभग्नाम्। भवन्ति च तथाविधावसरे अवश्यरक्षितव्यान् पुत्रकलत्रादिस्व-जनान् विहाय 'आत्मानं सततं रक्षेद्दारैरपि धनैरपि' इति नीति-मनुसरन्त आत्ममात्रपरित्राणपरायणाः। किमतः परमसोपा-समारताप्रतिपादने प्रमाणान्तरापेक्षा वर्तते। अथ ये तावत्तृणे-भ्योऽप्यसाराः पशुभ्योऽपि निकृष्टतराः तृणादिसृष्टेरनन्तरं तथा-विधजीवनिर्माणं विश्वविधातुः कीदृशं नाम बुद्धिमत्ताप्रकर्षं प्रकटयति ? (सर्वेषामुच्चहास्यम्)

इत्येवं हेतुप्रमाणपुरस्सरं सुचिरं बहुविधं विशदं च व्याख्याय सभापतिरश्वत्थदेव उद्भिज्जपरिषदं विसर्जयामास। वयमपि तामश्वत्थव्याख्यातां मानवचरितस्यासारतां मुहुर्मुहुर्विभावयन्तो विस्मयमानमानसाः स्वगृहं प्रति प्रस्थिताः। यथा दृष्टं श्रुतं च निवेदितं प्रियपाठकेभ्यः।

—हृषीकेशशास्त्री भट्टाचार्यः (प्रबन्धमञ्जरी).

## १८—क्लेशः फलेन हि पुनर्नवतां विधत्ते

यथा यथाधिकायासः पुण्यवृद्धिस्तथा तथा।
पुण्यं हि सात्त्विकं नूनमशक्यमपि साधयेत्॥

अवमितप्रायो दिवसः।

अस्ति निविष्टं मणिमयगिरिमेखलायाः किञ्चिदाराख्यग्रामस्य च मध्ये क्वचिद्विविक्तस्थले कस्यचिद् ग्रामीणस्य कुटीरमेकम्। प्रदोषेऽस्मिन् काचिद्रूपयौवनसम्पन्ना हिमानाम्नी युवतिः सृष्टिसौन्दर्यमालोकयन्ती कुट्या वहिश्चिनारनाम्नस्तरुविशेषस्यालवालं परितो रचितायां वेदिकायामुपविष्टासीत्। दरीदृश्यते तस्याः पुरः कुटिलः पन्था यः शालिक्षेत्रारारम्य कारवाहीगुल्मेष्वन्तर्हितस्तश्च पुनः सुदूरं दृष्टिगोचरो भवति। नेदीयसः परःशतपादायतस्य गिरेरधस्तात्सुदूरं प्रसृतः प्रचण्डो जलप्रवाहः प्रतिबध्नतःप्रस्तरान् शकलीकुर्वन् फेननिकरो-

दृगारभासुरो निर्झरझर्झरनिनादेन दिगन्तमापूरयन्निवासीत्। आस्तामुभावपि पार्श्वौ पर्वतस्यावृतौ नानाविधपुष्पितवन्यगुल्मैर्नन्दनवनरमणीयताविडम्बिभिः। अतिमनोहरं हिमालयस्याद्भुतसौन्दर्यं दर्शं दर्शं विस्मृत्यात्मानं हिमा गाढं समाहितेव तस्थौ।

अथ यावत्तरुणी दीर्घं निःश्वसिमिति तावत्तस्या माता पृष्ठतः समुपेत्य तारस्वरेण पप्रच्छ—'हिमे, अयि किं चिन्तयसि वचनं सर्वथा तस्य मूढमतेस्तापसस्य श्रीनगरनिवासिनः ? निमित्तज्ञोऽयं धर्मकञ्चुकीति निश्चिनोमि।'

हिमा—मातः, किमिति वृथा तापसमुपालभसे ?

वृद्धा—अपि तेन मनिश्चयं ज्ञापितासि तव पत्युरम्बुजस्य सकेतस्थानमुद्दिश्य। अम्बुजस्य वृत्तोपलब्ध्यै गतवत्यहं सह त्वया तत्सविधे, न पुनस्तद्विचित्रमुखावलोकनाय। आः, वञ्चक एवासौ। पितापि तस्य त्रिंशे वर्षे परिभ्रमणसक्तो भार्यां मासजातापत्यं च विसृज्यामरनाथयात्रायद्धादरो गेहान्निर्गतो न पुनर्निवृत्त इति श्रुतमस्माभिः। गेहिनी तस्यानवरतनयनाम्बुधारां वर्षन्ती शोकानलेन प्लुष्टेव स्वशिशुं ग्राहितानम्बुजनामकं तदानीमेकाब्ददेशीयं कस्मैचित् सुहृदे समर्प्य दिवं गतवतीत्यपि सुविदितमेव नौ।

हिमा—परं चिरात्तिरोहितस्य पितुरन्वेषणैकधिया प्रस्थितो हिमाचलं प्रति तव जामाता, न तु विहारसुखोपभोगाय न वा पर्यटनासक्त्या।

वृद्धा—प्रवृत्तिरीदृशी वशपरम्परागतास्तीति न सन्देहः। वत्से, वृद्धाया मे वचः शृणु तावत्। अतिदीर्घत्वादावां न यावच्छिन्नायिते भवावस्तावदेव श्रीनगरं निर्वर्तिष्यावहे।

हिमा (सविस्मयम्)—किम् ? इयद् दूरमागत्य निवर्तिष्यावहे ? मातः, प्रोक्तमेव मयाऽमकृद्यन्न कोऽपि जगतीतले मत्प्रतिज्ञां मिथ्याकर्तुं प्रभविष्यतीति। तस्मादल निषेधवचोभिः।

वृद्धा (किञ्चित्कुपिता)—मूढासि त्वं यत्पराधीनेऽपि विषये एवंविधा प्रतिज्ञा कृता त्वया। अतो गम्यतामेकाकिन्यैव। निवर्तिष्येऽहमितः श्रीनगरम्।

× × ×

ततश्च पर्वतश्रेणीतः पर्वतश्रेणीम्, अटवीतोऽटवीम्, शिखराग्राच्छिखराग्रम्, अधित्यकातोऽधित्यका समुल्लङ्घ्य निर्भयं सनिश्चयं प्राचलत् प्रगल्भेयं तरुणी। पर्यन्ते श्रीमदमरनाथगुहाया वहिःस्थाधित्यका दृष्टिगोचराऽभूत्। ततो यावत् पिसुनाम्नः शैलस्योत्सङ्गे स्मयमानशेषनागाख्यसरोवरमवलोकयन्त्यधित्यकां समुपैति सा, तावद् बृहदक्षोट्टद्रुमस्याधो ध्यायन्तं कञ्चित्तापसवृद्धं व्यलोकयद्धिमा। प्रदोपस्यैधमानान्धकारे निष्प्रभनीललोहितपर्वतच्छायाभिर्घनीभूते स प्रवयर जीर्णपर्णमिव वलितपीतवर्णास्य आनाभिविलम्बमानसितसान्द्रकूर्चो भस्मधूलिरूषितजटाजूटकोऽशिथिलाकुञ्चितगात्रो दाक्षिण्याङ्कितललाटो भद्रतयेव स्नातशरीरो भ्रूमध्यस्थापिताचलदृष्टिः शताधिकवर्षदेशीयः पुरातनकालप्रतीक इव समुदलसत्।

हिमायाः पदन्यासशब्दमाकर्ण्यायितद्योतमानं नयनयुग्ममुन्मील्यान्वयुङ्क्त तां—'वत्से, कुतः प्रतिपन्नं त्वयेदमतिक्लेशकरं प्रयाणम् ?' इत्यनुयुक्तया युवत्या तस्य तेजस्विमुखमण्डलं निपुणं निरीक्ष्यमाणया श्रीनगरकृतावासस्य तापसस्य सन्देशो निवेदितस्तस्मै। निःशब्दं रुदित्वा शनैः शनैः स्खलिता-

क्षरं स्वीयमितिवृत्तं तस्मै न्यवेदयत्—चिरादन्तर्हितस्य भर्तुर्वार्ताम्, तद्वियोगवेदनाजन्यं दुःखम्, निजं पर्यटनाभिषङ्गं च । योगीन्द्रोऽभिनन्द्य तत्सङ्कल्पम्, इङ्गितेन समीपवर्तिनीं निम्नपटलां निजकुटीं तस्यै निर्दिष्टवान् । सव्रीडं दोलायमानमानसामेतां साग्रहं समार्द्रव चाभाषिष्ट—'बाले, प्रविश्यतां कुटीरमिदं निर्भयमाप्रातश्च विश्रान्तिसुखं सेव्यताम्' इति । तत्कारुण्येन प्रफुल्लहृदया तरुणी प्राविशत् कुटीम्, विस्तृत्य चास्तरणं भूमौ सपदि गाढनिद्रया गृहीताभूदानिशीथम् ।

ततश्च गवाक्षान्तर्निविष्टसुधाकरकरचुम्बितानना जागरितेयं शय्यां विसृज्य कुटीराद् बहिः स्थित्वा कौमुदीदुग्धप्रवाहपूरधवलितं काननमालोकयन्ती विधातुः सृष्टिचमत्कारेण परवशीभूतासीत् । सरवत्तनीरेऽस्मिन् शेषनागसरोवरे रजन्या ध्यानपरा वृत्तिः प्रतिबिम्बितासीत् । आलोकस्यात्यद्भुतरमणीयत्वपराधानायास्तस्या विचारसरण्या समापतत् स्मरणं चिराद्व्यतीतानां वर्षाणाम्, स्वभर्तृसनाथीकृतस्वगेहस्य, आत्मीयस्वल्पकालस्थायिवैवाहिकजीवनयात्रायाः, अब्दपञ्चकतः पूर्वं संवृत्तस्यास्नुजस्य प्रस्थानस्य मन्दिरात् । दूरस्थाधित्यकातस्तस्य स्वरप्रतिध्वानरथार्वाणि च सा व्यभावयत् । भावनेयं तु क्षणिकस्वप्न इव विनष्टाऽभूत्पुनश्च गाढनिःशब्दा शर्वरी सर्वतः प्रासरत् । शीतशीतोपकाले योगीन्द्रं पूर्वेद्युरिव ध्यानावस्थितमद्राक्षीत् सा । सन्ध्यायामस्यान्तरायो मा भूदिति यावत्सा पुनश्चलितुं प्रवर्तते तावन्मुनेर्नयनयुगमुन्मीलितं वलितानने चास्य किञ्चित् मन्दस्मितमाविरभूत् । कृतज्ञताभरपुरस्सरमापृच्छमाना युवतिं मुनीन्द्रोऽभाषिष्ट—'वत्से, याहि पुरः । शश्वत्स्थास्यति तव पुण्यम् । शिवास्ते सन्तु पन्थानः । सर्वथा स्वस्ति वितरन्तु ते

